नमोऽस्तु नीलग्रीवाय सहस्राक्षाय ते नमः ।
सहस्रपाणये तुभ्यं नमो मीढुष्टमाय ते ॥ ५९ ॥
कपर्दिने नमस्तुभ्यं कालरूपाय ते नमः ।
नमस्ते चाऽऽत्तशस्त्राय नमस्ते शूलपाणये ॥ ६० ॥

मीढुष्टमाय श्रेष्ठतमाय ॥ ५९ ॥ ६० ॥

हिरण्यपाणये तुभ्यं हिरण्यपतये नमः ।
नमस्ते वृक्षरूपाय हरिकेशाय ते नमः ॥ ६१ ॥

हरिकेशाय हरितवर्णकेशाय ॥ ६१ ॥

पशूनां पतये तुभ्यं पथीनां पतये नमः ।
पुष्टानां पतये तुभ्यं क्षेत्राणां पतये नमः ॥ ६२ ॥

पुष्टानामिति । भावे निष्ठा । पुष्टानां वाक्पुष्टिज्ञानपुष्ट्यादीनां दक्षपुष्टीनां पतये ॥ ६२ ॥

आततायिस्वरूपाय वनानां पतये नमः ।
रोहिताय स्थपतये वृक्षाणां पतये नमः ॥ ६३ ॥

आततायिस्वरूपायाऽऽततेनाधिज्येन धनुषा जगदवतीत्याततावी । अवतेर्णिनिः । तस्मै । तिष्ठति पातीति स्थपतिस्तस्मै ॥ ६३ ॥

नमस्ते मन्त्रिणे साक्षात्कक्षाणां पतये नमः ।
ओपधीनां च पतये नमः साक्षात्परात्मने ॥ ६४ ॥

कक्षाणां कक्षा गहना देशगहना भाषागहना धर्माधर्मादिगहनास्तेषां पतये । यद्वा गिरिनदीगह्वरगुल्मादयश्च कक्षास्तेषां स्वामिने तत्र स्थितानां वा रक्षकाय ॥ ६४ ॥

उच्चैर्घोषाय देवाय पत्तीनां पतये नमः ।
सत्त्वानां पतये तुभ्यं धनानां पतये नमः ॥ ६५ ॥
सहमानाय शान्ताय शंकराय नमो नमः ।
आर्धीनां पतये तुभ्यं व्याधीनां पतये नमः ॥ ६६ ॥

उच्चैर्घोषाय । उच्छ्रितशब्दायोच्छ्रितरवायेत्यर्थः । पत्तीनाम् "एकेभैकरथा त्र्यश्वा पत्तिः" इत्यमरः । तासां पतये । सत्त्वानां सह सीदतां महाप्रमथगणानां पतये ॥ ६५ ॥ ६६ ॥

ककुभाय नमस्तुभ्यं नमस्तेऽस्तु निषङ्गिणे ।
सेनानां पतये तुभ्यं कृत्स्नाय नमो नमः ॥ ६७ ॥

ककुभाय । ककुभो दिशो वासस्त्वेनास्य सन्तीत्यर्थे अर्शआदित्वादच्, तस्मै ॥ ६७ ॥

तस्कराणां नमस्तुभ्यं पतये पापहारिणे ।
वञ्चते परिवञ्चते स्तायूनां पतये नमः ॥ ६८ ॥

वञ्चते गच्छते वचिर्गत्यर्थः । परिवञ्चते परितः सर्वत्र गच्छते । स्तायूनाम् । छद्मचारिणो ये वस्त्रादीनपहरन्ति कपटसाधुवेषास्ते तायवः "उतस्मैनं वस्त्रमथिं न तायुम्" इत्यादौ दर्शनात् । तत्र वा सकारलोपः । अत्र वा सकारोपजनस्तेषां पतये ॥ ६८ ॥

नमो निचेरवे तुभ्यमरण्यपतये नमः ।
उष्णीषिणे नमस्तुभ्यं नमस्ते परमात्मने ॥ ६९ ॥
विस्तृताय नमस्तुभ्यमासीनाय नमो नमः ।
शयानाय नमस्तुभ्यं सुप्ताय नमो नमः ॥ ७० ॥
प्रबुद्धाय नमस्तुभ्यं स्थिराय परमात्मने ।
सभारूपाय ते नित्यं सभायाः पतये नमः ॥ ७१ ॥
नमः शिवाय साम्बाय ब्रह्मणे सर्वसाक्षिणे ॥ ७२ ॥

सूत उवाच—

एवं सुरासुरैरन्यैः शंकरोऽभिष्टुतः पुनः ।
कृत्वा प्रसादं सर्वेषां तत्रैवान्तर्हितोऽभवत् ॥ ७३ ॥
अस्य तीर्थस्य माहात्म्यं स्थानस्यास्य सभापतेः ।
यो वेत्ति श्रद्धया मुक्तिः सिद्धा तस्य महात्मनः ॥ ७४ ॥

यः पठेच्छृणुयाद्वाऽपि मुक्तिखण्डमिमं सदा ॥
स साक्षान्मुक्तिमाप्नोति प्रसादेन सभापतेः ॥ ७५ ॥
नमो व्यासाय गुरवे मम विज्ञानदायिने ॥
नमः शिवाय सोमाय साक्षिणे प्रत्यगात्मने ॥ ७६ ॥

इति श्रीस्कन्दपुराणे सूतसंहितायां मुक्तिखण्ड ईश्वर-
नृत्यदर्शनं नाम नवमोऽध्यायः ॥ ९ ॥

निचेरवे निभृतं नितरा चरणशीलाय ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥
॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥

इति श्रीमत्काशीविलासश्रीक्रियाशक्तिपरमभक्तश्रीमत्त्र्यम्बकपादाब्जसेवा-
परायणेनोपनिषन्मार्गप्रवर्तकेन श्रीमाधवाचार्येण विरचितायां
सूतसंहितातात्पर्यदीपिकायां मुक्तिखण्ड ईश्वरनृत्यदर्शनं
नाम नवमोऽध्यायः ॥ ९ ॥



# सूतसंहितायाखण्डत्रयान्तर्गतश्लोकाद्यचरणवर्णानुक्रमः ।


BHARATIYA VIDYA BHAVAN
S N 11651
LIBRARY